# श्रीपञ्चमुखिवीरहनूमत्कवचम्

श्री सुदर्शनसंहिता अन्तर्गत

अस्य श्रीपञ्चमुखिवीरहनूमत्कवचस्तोत्रमहामन्त्रस्य
ब्रह्मा ऋषिः । गायत्री छन्दः ।
पञ्चमुख्यन्तर्गतः श्रीरामरूपी परमात्मा देवता ।
रां बीजम् । मं शक्तिः । चन्द्र इति कीलकम् ।
पञ्चमुख्यन्तर्गत श्रीरामरूपिपरमात्मप्रसादसिद्ध्यर्थे
मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ।

रां अङ्गुष्ठाभ्यां नमः ।
रीं तर्जनीभ्यां नमः ।
रूं मध्यमाभ्यां नमः ।
रैं अनामिकाभ्यां नमः ।
रौं कनिष्ठिकाभ्यां नमः ।
रः करतलकरपृष्ठाभ्यां नमः ।

रां हृदयाय नमः ।
रीं शिरसे स्वाहा ।
रूं शिखायै वषट् ।
रैं कवचाय हुम् ।
रौं नेत्राभ्यां वौषट् ।
रं अस्त्राय फट् । भूर्भुवस्सुवरोम् ॥

(इति दिग्बन्धः)

अथ ध्यानम्

वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं
दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा ।
हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशादीन् हलान्
खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिदर्पापहम् ॥

ईश्वर उवाच
अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि ।
यत्कृतं देवदेवेशि ध्यानं हनुमतः परम् ॥ १॥

पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् ।
बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् ॥ २॥

पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ३॥

अन्यत्तु दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् ।
अत्युग्रतेजोज्वलितं भीषणं भयनाशनम् ॥ ४॥

पश्चिमं गारुडं वक्त्रं वज्रकुण्डं महाबलम् ।
सर्वनागप्रशमनं विषभूतादिकृन्तनम् ॥ ५॥

उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं महोज्ज्वलम् ।
पातालसिद्धिवेतालज्वररोगादिकृन्तनम् ॥ ६॥

ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् ।
एतत्पञ्चमुखं तस्य ध्यायतामभयङ्करम् ॥

खड्गं त्रिशूलं खट्वाङ्गं पाशाङ्कुशसुपर्वतम् ।

मुष्टिद्रुमगदाभिन्दिपालज्ञानेन संयुतम् ॥ ८॥

एतान्यायुधजालानि धारयन्तं यजामहे ।
प्रेतासनोपविष्टं तु सर्वाभरणभूषितम् ॥ ९॥

दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ १०॥

पञ्चास्यमच्युतमनेकविचित्रवीर्यं
श्रीशङ्खचक्ररमणीयभुजाग्रदेशम् ।
पीताम्बरं मकुटकुण्डलनूपुराङ्गं
उद्योतितं कपिवरं हृदि भावयामि ॥ ११॥

मर्कटेश महोत्साह सर्वशोकविनाशक ।
शत्रून् संहर मां रक्ष श्रियं दापय मे प्रभो ॥ १२॥

हरिमर्कटमर्कटमन्त्रमिमं परिलिख्यति लिख्यति भूमितले ।
यदि नश्यति नश्यति शत्रुकुलं यदि मुञ्चति मुञ्चति वामकरः ॥ १३॥

इति ध्यानम्

श्रीपञ्चमुखहनुमत्कवचस्तोत्रमहामन्त्रपठनं करिष्ये

ॐ हरिमर्कटमहामर्कटाय ॐ वं वं वं वं वं वं फट् फे फे स्वाहा ।
ॐ हरिमर्कटमहामर्कटाय ॐ घं घं घं घं घं घं फट् फे फे स्वाहा ।
ॐ हरिमर्कटमहामर्कटाय ॐ खें खें खें खें खें खें फट् फे फे
मारणाय स्वाहा ।
ॐ हरिमर्कटमर्कटाय ॐ ठं ठं ठं ठं ठं ठं फट् फे फे

स्तम्भनाय स्वाहा ।

ॐ हरिमर्कटमर्कटाय ॐ ॐ ॐ ॐ ॐ ॐ फट् फे फे आकर्षणसत्वकाय स्वाहा ।

ॐ हरिमर्कटमर्कटमन्त्रमिदं

परिलिख्यति लिख्यति भूमितले ।

यदि नश्यति नश्यति वामकरे

परिमुञ्चति मुञ्चति शृङ्खलिका ।

ॐ नमो भगवते पञ्चवदनाय पूर्वे कपिमुखाय श्रीवीरहनूमते

ॐ टं टं टं टं टं टं

सकलशत्रुसंहाराय हुं फट् फे फे फे फे फे फे स्वाहा ।

ॐ नमो भगवते श्रीपञ्चवदनाय दक्षिणे

करालवदन श्रीनृसिंहमुखाय

श्रीवीरहनूमते ॐ हं हं हं हं हं हं सकल भूतप्रेतदमनाय

महाबलाय हुं फट् फे फे फे फे फे फे स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय पश्चिमे गरुडमुखाय

श्रीवीरहनूमते ॐ मं मं मं मं मं मं महारुद्राय

सकलरोगविषपरिहाराय

हुं फट् फे फे फे फे फे फे स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय उत्तरे आदिवराहमुखाय श्रीवीरहनूमते

ॐ लं लं लं लं लं लं लक्ष्मणप्राणदात्रे लङ्कापुरीदाहनाय

सकलसम्पत्कराय पुत्रपौत्राद्यभिवृद्धिकराय ॐ नमः स्वाहा ।

ॐ नमो भगवते पञ्चवदनाय ऊर्ध्वमुखस्थितहयग्रीवमुखाय

श्रीवीरहनूमते ॐ रुं रुं रुं रुं रुं रुं रुद्रमूर्तये सकललोकवशीकराय

वेदविद्यास्वरूपिणे । ॐ नमः स्वाहा ।

(इति मूलमन्त्रः । बीजमुद्राः प्रदर्शयेत्)

ॐ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं

तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं

ळं क्षं स्वाहा । इति दिग्बन्धः ।

ॐ नमो भगवते आञ्जनेयाय महाबलाय हुं फट् फे फे फे फे फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनूमते प्रबलपराक्रमाय आक्रान्तदिङ्मण्डलाय

शोभिताननाय धवलीकृतवज्रदेहाय जगच्चिन्तकाय रुद्रावताराय

लङ्कापुरीदाहनाय उदधिलङ्घनाय सेतुबन्धनाय दशकण्ठशिरःक्रान्ताय

सीताश्वासनाय अनन्तकोटिब्रह्माण्डनायकाय महाबलाय वायुपुत्राय

अञ्जनादेवीगर्भसम्भूताय श्रीरामलक्ष्मणानन्दकराय कपिसैन्यप्रियकराय

सुग्रीवसहायकारणकार्यसाधकाय पर्वतोत्पाटनाय कुमारब्रह्मचारिणे

गम्भीरशब्दोदयाय ॥

(श्रीरामचन्द्रदूताय आञ्जनेयाय वायुपुत्राय महाबलाय सीतादुःख-

निवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय कोलाहलसकल-

ब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिरालम्बिताय पिङ्गलनयनाय

अमितविक्रमाय सूर्यबिम्बफलसेवनाय दृष्टिनिरालङ्कृताय

अङ्गदलक्ष्मणमहाकपिसैन्यप्राणनिर्वाहकाय दशकण्ठविध्वंसनाय

रामेष्टाय फल्गुनसखाय सीतासमेतरामचन्द्रप्रसादकाय स्वाहा ।)

ॐ ह्रीं क्लीं सर्वदुष्टग्रहनिवारणाय सर्वरोगज्वरोच्चाटनाय

शाकिनी-डाकिनीविध्वंसनाय ॐ ह्रीं क्लीं हुं फट् फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनूमते

सर्वभूतज्वरैकाहिक-द्व्याहिक-त्र्याहिक-चातुर्थिक-सन्ततविषमज्वर-

गुप्तज्वर-शीतज्वर-महेश्वरज्वर-वैष्णवज्वरादिसर्वज्वरान्

छिन्दि छिन्दि भिन्दि भिन्दि ।

यक्षराक्षसब्रह्मराक्षसभूतप्रेतपिशाचानुच्चाटयोच्चाटय ॥

ॐ श्रीं ह्रीं हुं फट् फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनूमते नमः ।

ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः । आह आह । असै असै एहि एहि

ॐ ॐ हों हों हुं हुं फट् फे फे स्वाहा ।

ॐ नमो भगवते पवनात्मजाय डाकिनी-शाकिनी-मोहिनीनिःशेष-

निरसनाय सर्वविषं निर्विषं कुरु कारय कारय हुं फट् फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनुमते

सिंहशरभ-शार्दूल-गण्डभेरुण्ड-पुरुषमृगाणां

ओशाति निरसनाय । ???

क्रमनिरसनक्रमणं कुरु । सर्वरोगान्निवारय निवारय आक्रोशय आक्रोशय

शत्रून्मादभयं छिन्दि छिन्दि । छादय छादय । मारय मारय ।

शोषय शोषय । मोहय मोहय । ज्वालय ज्वालय । प्रहारय प्रहारय ।

मम सर्वरोगान् छेदय छेदय । ॐ ह्रीं हुं फट् फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनुमते सर्वरोगदुष्टग्रहानुच्चाटय उच्चाटय

परबलानि क्षोभय क्षोभय ।

मम सर्वकार्याणि साधय साधय । शृङ्खलाबन्धनं मोक्षय मोक्षय ।

कारागृहादिभ्यो मोचय मोचय । शिरःशूल-कर्णशूलाक्षिशूल-कुक्षिशूल-

पार्श्वशूलादि महारोगान् निवारय निवारय । नागपाशानन्त-वासुकि-

तक्षक-कर्कोटक-कालगुलियकपद्म-महापद्म-कुमुदाचलचर-रात्रिचर-

दिवाचरादिसर्वविषं निर्विषं कुरु निर्विषं कुरु । सर्वरोगनिवारणं कुरु ।

सर्वराजसभामुखस्तम्भनं कुरु । स्त्रीजनस्तम्भनं कुरु स्तम्भनं कुरु ।

सर्वभयचोरभयाग्निभयप्रशमनं कुरु प्रशमनं कुरु ।

सर्वनरयन्त्र-परतन्त्र-परविद्यां छेदय छेदय । सन्त्रासय सन्त्रासय ।

मम सर्वविद्यां प्रकटय प्रकटय । पोषय पोषय ।

सर्वारिष्टं शमय शमय सर्वशत्रून् संहारय संहारय ।

सर्वरोगपिशाचबाधां निवारय निवारय ।

ॐ ह्रां ह्रीं ह्रूं ह्रें फट् फे फे स्वाहा ।

ॐ नमो भगवते श्रीवीरहनूमते वरप्रसादकाय सर्वाभीष्टप्रदाय
सकलसम्पत्कराय महारक्षकाय ॐ जं जं जं जं जं जं
जगज्जीवनाय हुं फट् फे फे फे स्वाहा ।

य इदं कवचं नित्यं प्रपठेत् प्रयतो नरः ।
एकवारं पठेन्नित्यं सर्वशत्रुविनाशनम् ।
द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम् ॥

त्रिवारं यः पठेन्नित्यं सर्वसम्पत्करं शुभम् ।
चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम् ॥

पञ्चवारं पठेन्नित्यं सर्वशत्रुवशीकरम् ।
षड्वारं तु पठेन्नित्यं सर्वदेववशीकरम् ॥

सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम् ।
अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम् ॥

नववारं सप्तकेन सर्वराज्यवशीकरम् ।
दशवारं च प्रजपेत् त्रैलोक्यज्ञानदर्शनम् ॥

एकादशं जपित्वा तु सर्वसिद्धिकरं नृणाम् ।
त्रिसप्तनववारं च राजभोगं च सम्भवेत् ॥

द्विसप्तदशवारं तु त्रैलोक्यज्ञानदर्शनम् ।
दशैकवारं पठनादिदं मन्त्रं त्रिसप्तकम् ॥

स्वजनैस्तु समायुक्तस्त्रैलोक्यविजयी भवेत् ।
कवचस्मरणादेव महाफलमवाप्नुयात् ।

चन्द्राभं चरणारविन्दयुगलं कौपीनमौञ्जीधरं
नाभ्यां वै कटिसूत्रयुक्तवसनं यज्ञोपवीतं शुभम् ।
हस्ताभ्यामवलम्बिताञ्जलिपुटं हारावलिं कुण्डलं
बिभ्रद्दीर्घशिखाप्रसन्नवदनं वन्द्याञ्जनेयं भजे ॥

।।इति श्रीपञ्चमुखिवीरहनूमत्कवचम् ।।

सुदर्शनसंहितातः